# पात्र-गण

पुरुष

सूत्रधार… नाटक-निर्देशक ।

शङ्कर… महादेव ।

कार्तिक… महादेवक पुत्र ।

बाण… दैत्यराज, शोणितपुर नरेश ।

अनिरुद्ध… श्रीकृष्णक पौत्र, प्रद्युम्नक पुत्र, नायक ।

नारद… देवर्षि ।

★श्रीकृष्ण… भगवान् ।

★बलराम… श्रीकृष्णक जेठ भाए ।

★कामदेव… श्रीकृष्णक पुत्र ।

कुम्भाण्ड… बाणक मन्त्री ।

कञ्चुकी… अन्तःपुरक संचालक, वृद्ध ।

दौवारिक (द्वारी)—द्वारपाल ।

★

स्त्री

नटी… सूत्रधारक पत्नी ।

देवी… बाणक पत्नी ।

गौरी… भगवती पार्वती ।

उषा… बाणक कन्या, नायिका ।

रामा… उषाक सहचरी ।

चित्रलेखा… „ ।

वृद्धा… अन्तःपुरक सेविका ।

देवानन्दकृतम्

# ॥ उषाहरणनाटकम् ॥

... ... ... ... ... विजयं सदा ।

असुराः संगरे प्राप्ता नूनं क्षयमयन्ति ते ॥

(पुनराकाशे कर्णं दत्वा) लिखनार्थमवधेहि ।

नटी—अज्ज ! किं उण तं ण जाणे । [आर्य ! किं पुनस्तन्न जाने] ।

सूत्र०—आर्ये ! शृणु, लिखनार्थपत्रिकामेनाम् ।

आयासेन समुद्रमध्यरचिता कष्टातिकष्टेन या
स्रष्टुं द्वारवती, परैरपि न या दृष्टा कुतो लङ्घिता ।
तस्यां सप्तमसौधमध्यवसतिः प्राद्युम्निरास्ते कृती
यास्या यादववेष्टितस्य हरणं तस्य स्त्रिया हा कथम् ॥

नटी—अच्चरियं अच्चरियं । [आश्चर्यमाश्चर्यम् ।]

सूत्र०—(सव्यगवस्मितं) आर्ये ! हरिवंशःकीर्तनमिति जानासि । तत्र भगवतः सत्यवती-पराशरात्मजस्य व्यासस्य रसभाजन-सभाजनानामनुरञ्जनाय पौराणी वाणी विलसति ।

नटी—अध इं । [अथ किम् ?]

सूत्र०—पौराणी खलु वाणी, नृत्यारम्भाय मे जाता ।
व्यासस्य काव्यमार्गे, सा कविना मृग्यते यस्मात् ॥

नटी—एदं दे अदं तस्सको जिजवाण ........................ ........................

........................ दितवाकरणिज्जं । (?)

सूत्र—(क्षणं ध्यात्वा) महद्गुणाद्भुतकवेर्वाणी । कथमुपहासं करिष्यन्ति नृपधीराः ।

नटी—अज्ज ! अच्चरिअं । अच्चरिअं । [आर्य ! आश्चर्यमाश्चर्यम् ।]

सूत्र०—(सोत्कण्ठं) शृणु सर्वविज्ञे ! अस्ति तीरभुक्तिदक्षिणदिशि परहट नाम पुरम्। तत्र कतिपूर्वपुरुषाः पण्डिता याज्ञिकाः परिवसन्ति स्म। येषामेषा कथा—

[1]धीराद् पद्मरस्तोऽनुपमवित् श्रीरामभद्रोऽभवद्
धीरो वृद्धपदादिनामकथितः कण्ठस्थतर्कार्णवः।
यो विद्यानगराद् यथार्थनिकरानानीय तां प्रावदत्
सोऽप्यन्ते त्रिपुरारिरम्यनगरे तीर्थे च मुक्तिं गतः॥

नटी—अच्चरिअं अच्चरिअं तदो तदो। [आश्चर्यमाश्चर्यम्। ततस्ततः।]

सूत्र०—(पुनः क्षणं ध्यात्वा) यस्य श्रीभवदेव-यदुनाथ-रघुनाथा गीष्पतितुल्यास्तनयाः। किञ्च तदस्यतकनिष्ठतनयस्य विविधगुणनिलयस्य कवीन्द्रपदाङ्कित-श्रीरघुनाथस्यात्मसम्भवो गुणवतीनन्दनो देवानन्दनामा कवि नर्त्तकेषु अनुकम्पितः स्वकृतमुषाहरणं नाम नाटकमस्मासु समर्पितवान्। तावत् प्रतिपात्रं प्रयासो विधेयः। यावद् गुणधीरविज्ञनटान् सामाजिकान् ... ... ... ... ... ... ... ...।

नटी—.... ... ... ... ... ..।

सूत्र०—(क्षणं निर्वर्ण्य) वस्तुतो वारं वारं धीरकविभिर्विलोकितेयं व्यासभाषितकथा। तेन कविः कर्तुमिमामुद्यतः।

नटी—अध इं। [अथ किम् ?]

सूत्र०—तेन सरस्वतीं व्यासं च प्रणम्य नृत्यं कर्त्तुमुद्यतोऽस्मि।

नटी—अच्चरिअं अच्चरिअं। [आश्चर्यमाश्चर्यम्।]

सूत्र०—कथं नर्त्तकैः परिरणन् नूपुरं व्यवसितं पुरः ?

(नेपथ्ये—
महुवैरिपुत्त-पुत्तो तिहुअणभव्वो जअं पत्तो।
जलमज्झ-णअरवासी तस्सवि कआ-किदं हरणं॥)
[मधुवैरिपुत्रपुत्रो त्रिभुवनभव्यो जयं प्राप्तः।
जलमध्यनगरवासी तस्यापि कन्याकृतं हरणम्॥]

१. धराधाधीनुपदयो धीरामभद्रो...मूल मे।



सूत्र०—तेनानिरुद्धस्य चित्रलेखया प्रावेशितमीयं धृत्वा। तदलमिदानीमग्निमव्यग्रतेयम्।

नटी—अय्य ! तुज्झ आदेशेण सच्चं णच्चिदव्वं। तदो तदो।
[आर्य ! तवादेशेन सत्यं नर्त्तितव्यम्। ततस्ततः।]

सूत्र०—श्रोतव्यं प्रिये ! पात्रनामानि शृणु—

[छन्द—१]

बाण नारिसमेत, शङ्कर गौरि कातिक भावई।
कुम्भाण्ड बाणसुता सखीयुग कञ्चुकी जनि वारई॥
कामनन्दन देविरक्षक दूअ नारद गज्जई।
कृष्ण राम मनोज पाछहि वृद्ध सम्बाओ णच्चई॥

नटी—तदो तदो। [ततस्ततः किमिति ?]

सूत्र०—(पुरो विलोक्य सवैदग्ध्यम्) अये ! गौरीशङ्करभक्त्युत्कण्ठया कार्त्तिकेयक्रीडादर्शनभावितो बाणासुरस्तिष्ठति। तदेहि, नूनमावामप्यग्रिमनृत्यकृत्याय स्थिरीभवाव।

(इति निष्क्रान्तौ)

इति प्रस्तावना

( ततः प्रविशतो देवी-बाणनृपौ। ततः )

[गीत—१]

देवि बाणनृप देल परवेश। गौरीशङ्कर भगति उदेश॥
छत्र चामर नव परिजन पास। चहु दिश बहुविध कइए उलास॥
निज जन देलइन्हि आसन आनि।... ...... ... ... ... ...॥
आनन्दे देवानन्द कवि गाव। आगु बेकत होएत सब परथाव[1]॥

बाणः—देवि ! इत आस्यताम्।

देवी—बहुसो भिदह्मि। [बहुशो भतास्मि।]

१. प्रस्ताव।

बाणः—देवि ! मम प्राणसमासि । का भीतिः ? ··· ··· ··· ··· ··· ··· ····

···· ···· ···· ·· भो मुक्तिदर्शनाय समुत्कण्ठितोऽस्मि ।

देवी—इदोज्जेव दिट्ठा मणोरहस्स साआ आसदा । ·· ···· ··· ···· ···· ····

··· ··· ··· ··· ··· ···· ··· ··· ····

देवसानास्येवागतं ता कार्त्तिकेयानुगताः । (?)

(ततः प्रविशतो गौरीशङ्करौ बालकार्त्तिकेयश्च)

बराड़ी रागे—(गीत—२)

देवदेव महादेव देल परवेश । बाणभगति परसाद उदेश ॥
गौरी कातिक दुअओ साथ। सुरमुनि नर जन्हि नत कर माथ ॥
जन्हि कर बहुविध नटनक साज । राखिए सभ गुन रङ्ग समाज ॥
आनन्दे देवानन्द एहो चिन्त । परिणति होइति भगति परजंत ॥

(बाणः भक्तिपूर्वकं गौरीशङ्करौ प्रणम्य तिष्ठति ।)

गौरी—णाह ! कधं एसो असुरिपुत्तो ? [नाथ ! कथमेष असुरिपुत्रः ?]

शंकर—आम् गौरि ! आम् ।

गौरी—णाह ! एसो मङ्गलसम्पत्तो। [नाथ ! एष मङ्गलसंप्राप्तः ।]

शङ्करः—आवाभ्यामाशीर्भि श्रीतिवरवानयं भवतु ।

गौरी—णाह ! आराहणस्स पसादेण । [नाथ ! आराधनस्य प्रसादेन ।]

बाणः—(अञ्जलिं प्रसार्य तन्निकटमुपेत्य) देवास्मि ···· ···· ···· ···· ··· ····

दृष्ट्वा ते तनयक्रीड़ां ··· ··· ···· ·· ते मनः ।
सेवां करोमि गौरीश ! तनयस्ते भवाम्यहम् ॥

शंकरः - (गौरीं प्रति)-

अहं बाणस्य सेवाभिस्तुष्टः प्राणसमे ! सदा ।
कार्त्तिकेयसमस्नेहः कर्त्तव्यो दयया त्वया ॥
··· ··· ···· ···· ··· ··· ···· ··· ···· ···· ···· ··

बाणः - तेन बाणः कार्त्तिकेयेन क्रीडति ।

कार्त्ति० - समुदञ्चत्परिरणन्नूपुरं भ्रातृस्नेहेन ·· ··· ··· ··· ··· ··· ···· ··· ··· ··· ··· ···· ··· ···

··· ··· ···· ··· ··· ···· ··· ···· ··

···· ··· ···· ··· ···



(भक्त्याशोणितपुरं वितरति ।)

गौरी - गेण्ह एदं, सुभद्दं किदं । [गृहाणेदं सुभद्रं कृतम् ।]

शङ्करः - (बाणं प्रति) ·· ··· ··· ··· ···· ··· ···· ··· ···· ··· ··· ··· ···

···· ··· ··· ··· ··· ···· ··· ··· ··· ···· ··· ··· ···

बाणः—अशेषस्त्वत्प्रसादेन अहं शङ्करपूर्द्दनि ।
युद्धं याचे सुवीरेषु बाहुकण्डूतगर्वितः ॥

शङ्करः—(विहस्य)··· ··· ··· ··· येन दत्तं तत्पतनं यदा ।
तदैवात्यन्तघोरं हि युद्धं त्वं समवाप्नुयाः ॥

बाणः—पञ्चशतपुष्पा ··· ··· ··· ··· ··· ।

शंकरः - तनयतुल्यभवदाराधनेनाहं तुष्टः ।

बाणः - देव देव सर्वथा प्रसन्नोसि ।

शङ्करः - गौरि ! नूनमिदानीं ··· ··· ···· गृहप्रतिगतो बाणः ।

गौरी—णाह ! सव्वं उव्वेअस्स वि अहिमदं पुरिस्सदीति ।
[नाथ ! सर्वमुद्वेगस्यापि अभिमतं पूरयिष्यति ।]

बाणः—(सविमर्शस्मितं नेपथ्याभिमुखमुद्वीक्ष्य) कः कोऽत्र ?

(प्रविश्य दौवारिकः)

दौवा०—किमर्थं ममाह्वानं करोति प्रभुरिति ?

बाणः - प्रवेशय कुम्भाण्डमन्त्रिणम् ।

दौ० - तथा कृत्वा तिष्ठति ।)

(ततः प्रविशति कुम्भाण्डः)

(गीत - ३)

मन्त्री — बाण महथा[1] मोर बाण महथा ।
[2]नयदुर नयदुअ मोर महथा ॥

(ऊर्द्ध्वमवलोक्य)—

कहिअ दहिन····················।
के बुझ कइसन होएत परिनाम ॥

---

1—महत्तक, ऐश्वर्यशाली । २ – दुर्नीति । दुइ नीतिवाला ।

कतए असुर कहाँ देव उपाय ।
अमृतक तुलना गरल[१] न जाय ॥
...................................... ।
रीत होइत जा असुरक अन्त ॥

(दौवारिको निष्क्रान्तः)

बाणः—(कुम्भाण्डमालिङ्ग्य) ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ...

कुम्भाण्डः—केन प्रकारेण ?

बाणः - कुम्भाण्ड ! हरेण ।

... ... ... ... ... ... राज्यं प्रलब्धं हरेः
स्वत्वं प्राप्य भयं मुदा ननु कुलेनाद्या प्रभा किं सदा ।
निश्शङ्को विविधैः ... ... ... ... को वरः
प्रायो गर्वहतो गतोऽपि कुमतिः शुम्भस्य नो पश्यति ॥
... ... ... ... ... ... ... ...
... ... ... ... ... ... ।

बाणः—(सम्भ्रमम्) ... ... ... ... ... ...

कुम्भा० - बाणनृप ! को वरो विशेषेण लब्धः ?

बाणः - कार्त्तिकेयध्वजपतनेन महद्युद्धमिति वरः ।

कुम्भा० - ... ... ... ... ... ... ... ... ।

बाणः - आः !! कुम्भाण्ड ! ब्रह्माण्डस्फोटनं बाधा करोषि । स्वबलसमयुद्धवरः ।

कुम्भाण्डः - बाणनृप ! भव्यार्थो न कृतः ।

बाणः - अरे रे देवदूत कुम्भाण्ड ! सुकल्याणं कृतम् ।

कुम्भा - आम् बाणनृप ! आम् ।

१—विष ।



बाणः - पश्य, पश्य,

ध्वजस्य पतनं जातं लब्धो युद्धवरो यतः ।

कुम्भा० - (सर्वतो विलोक्य) शिव शिव !! केनोत्पातारम्भः ?
हा विमूढैः क्षयं यामो बाणभूप ! न चान्यथा ॥

बाणः - (सम्भ्रमम्) ... ... ... ... ...
... ... ... ... ... ... ।

कुम्भा० - (बाणं प्रति)

सुरारिविधिधर्मतः कुलमुखेन वृद्ध्याञ्चिता
निहत्य रिपवो रणे दधति यस्य राज्याश्रयम् ।
वदामि खलु कां व्यथां कुमतयः सदा दानवाः
विरुद्धपथमाश्रिताः पुरमुदं न यास्यन्ति ते ॥

बाणः - आः ! प्रचण्ड कुम्भाण्ड !!

कुम्भाण्डः - (स्वं प्रति)

बरारी रागे - (४)

ध्वजक पतन हर पहि रण पाई । करय लागल नृप कुमति उपाई ।
... ... ... ... । न चेतय सबतनु न चेतय चौर ॥
पुन उठ पुन सुत पुन खस भूमि । भवन घोर बोल बोलय घूमि ॥
... ... ... ... ... ... ... ... ... ।
लोक यतने रतिघर गेल बाण । आनन्द देवानन्द कवि भान ॥

(बाणनृपतिः सुप्तं तदवस्थं निजनिजस्थानमुपक्रान्तं नर्तकैरिदानीम् ... ... ... ... ... ।)

गौरीशङ्करयो मूर्त्तिस्तिष्ठतः शिवहेतवे ।
अस्माकमत्र सानन्द ताभ्यां राज्ये भविष्यसि ॥

(ततो निष्क्रान्ताः सर्वे)

॥ इति प्रथमोऽङ्कः ॥

★

# अथ द्वितीयोऽङ्कः

(ततः प्रविशतो गौरीशङ्करौ गणाश्च)

गौरी— (शङ्करं प्रति)

भक्तो मे वसते नाथ ! कुतुकार्थं नदीतटे।
प्रस्थानं कुरु तत्रैव मां गृहीत्वा गणैः सह ॥

शङ्करः— स्वरयैव नदीतीरं प्राप्ता वयम् ।

पश्य नद्यां गणाः क्रीडां कुर्वन्ति रतिचिन्तिताम् ।
मुदाकृतिधरा नार्यो सेवां ते रवैश्च मत्समाः ॥

गौरी— सस्वरभङ्ग विट्ठम । ... ... ... ... ... । (?)

शङ्करः— गौरि ! कथमावयोः क्रीडां द्रष्टुमागतैव सखीभ्यामुषा ?

(ततः प्रविशति रामा उषा च)

उषा— (सोल्लासभावपूर्वं गायति)

राजविजरागे गीतसं॰ (४)

१तटनीक तीर गौरि लय ग ... ... ... ... ।
बहुविधि बाजन गीत नाच धुनि गणे कएलाहे अनुरागे ॥
शंकर देविक रूप धरिय धरि ... ... ... ... ।
उषा तहँ धाउलि सखि दुइ लय आबे संगे ॥

रामा— किञ्च,

देवी देवक केलि देखि कँ उषा भेलि ... ... ... ... ।
... ... ... ... ... जग रत जे पहु अङ्क रह ठामा ॥

चित्र॰— किञ्च,

बुझि देवि पुनि उषा इङ्गित सपने केओ देल [दाने] ।
[आनन्दे देवानन्द] कवि गाबथि दुर कय मन अभिमाने ॥

१ – नदीक।



(उषा सखीभ्यां गौरीशङ्करौ प्रणमति । )

शङ्करः— (उषाप्रभृति ... ... ) ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ।

गौरी— सुति ! चिट्ठा सहि गौरिए सुहं पेसिदव्वं अह्मा... ... ... ...
... ... ... ... ... ... ... ... । (?)

चित्र॰— देअ ! पसीद पसीद । [ देव ! प्रसीद प्रसीद ।]

उषा— ... ... ... ... ... ... ...

या कान्तेन सह क्रीडां कुरुते सैव पूजिता ।
मनोजजनितं सौख्यं हन्त माति ममावृशी ॥

रामा— (संस्कृतमाश्रित्य दृष्ट्वा) गौरि !

... ... वासङ्गमुषा तेनातिमोहिता ।
दृष्ट्वा कामस्य सा चेष्टां चक्रे मूर्च्छति घूर्णते ॥

चित्र॰— (संस्कृतमाश्रित्य)

मुहु र्भ्रान्ति र्मुहु र्मूर्च्छा मुहुः संज्ञा मुहु र्धृतिः ।
सखीहृदयबाधा हि हन्तास्मास्वपि दृश्यते ॥

गौरी— (संस्कृतमाश्रित्य) तथाहि,

उषां कामवतीं ... ... ... ... ... ... ... ... ...
... ... ... ... ना चर्यैः तामूचु र्जगदम्बिकाम् ।
तामूचे जगदम्बिकाधृतिमतीमेका समीपस्थिताम् ।
वैशाखे सितपक्षगा ... ... ... ... ... ... ...
... ... मयियं हि पश्यसि वरं स्वप्नेन त्वं स्वप्रियम् ॥

(इति परिणामतो गौरीशङ्करौ)

उषा— (साश्रु) ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ...

सख्यौ बलात्स्वप्नेन यो निशि रमते मयि तज्जीवं स कथं रक्षयिष्यते ।

रामा-- (गुञ्जरीरागे)- (गीत- ६)

··· ··· ··· ··· ··· ··· ।

विफल होइत नहि गौरिक वानि ॥

तेजह अधोमुखि मन अनुमानि ।

तोर अभिमान ··· ··· ··· ··· ॥

लिखल ललाटक न होअ बिलोप ।

आवें हम हमने तेजह कोप ॥

भनथि देवानन्द आनन्द ··· ··· ।

··· ··· ··· ··· ··· ··· ॥

रामा-- सहि ! वीसत्थो होहि । [ सखि ! विश्वस्ता भव । ]

( नेपथ्ये--

कृता गणैः सह क्रीडा व्रीडासुस्मितसम्भ्रमम् ।

··· ··· ··· ··· ॥)

( इति नाट्येन गौरीशङ्करौ निष्क्रान्तौ )

उषा-- (सगद्‌गदस्वरं संस्कृतमाश्रित्य)

सख्यौ गौरीहरौ प्राप्तौ स्वस्थानं तटिनीतटात् ।

केलिं कृत्वा सुखासीनौ यामः स्वस्वगृहान्वयम् ॥

(इति तास्तथा कुर्वन्ति । )

रामा—(सभ्रूभङ्गम्) सहि ! सम्पत्तं णिअघरं । [सखि सम्प्राप्तं निज-गृहम् ।]

चित्र०—सहि ! सच्चं सुब्वेअस्स मूलं ··· ··· । [सखि ! सत्यमुद्वेगस्य मूलं ···]।

उषा—(रामां विलोक्य संस्कृतमाश्रित्य) पश्य,

शय्यायां रुधिरं··· ··· ··· ··· ··· ··· ··· ··· ··· ···

कर्णे मे रुधिरं तनौ च रुधिरं भीतिः स्थिता मां पितुः ।

भूमायां रुधिरं पटे च रुधिरं लोके··· ··· ··· ··· ··· ··· ···

··· ··· ··· ··· ··· धर्षिता निशि बलाद् देव्यै वहिः स्वप्नतः ॥



किञ्च (गुञ्जरी रागे) (गीत—७)

गौरीशङ्कर सेवि अएलाहुँ । ··· ··· ··· ॥

से दशमुहेँ उतछेप[1] कत भेल । [2]जड़ताएँ पदयुग बन्धन देल ॥

रोम--हरखे कत विकल परान । ··· ··· ··· ···॥

कम्पहि अपझम्प अहोनिसि आब । वदन विकृति आब किछु ने सोहाब ।

नयन नीर झर··· ··· । ··· ··· ··· ॥

आनन्दे देवानन्द कवि गाव । निन्दा हिअ पाओल आबओ भाव ॥

किञ्च, (नट रागे प्रतिमठताले) (गीत—८)

सुन सुन सुन्दरि हिन्नों···। ··· ··· ··· ··· ॥

[3]कायेँ वचने मने जे करिअ पाप । ऋपि कह ताहि न इहो अनुताप[4] ॥

[सखिसभे] उषा हललि बुझाए । गौरीक वर देल निफल ने जाए ॥

आनन्दे देवानन्द कवि चिन्त । सखि से बुझाउलि सपनक [तन्त][5] ॥

उषा—(संस्कृतमाश्रित्य रामां प्रति)

सखि स्वप्नस्य वृत्तान्तः स्मर्यते चिन्त्यते मुहुः ।

अहं जीवामि वनिते ! रसिकस्करदर्शनात् ॥

रामा—सव्वं भद्दस्स कारणं एव्व हुविस्सदि । [सर्वं भद्रस्य कारणमेव भवि-ष्यति ।]

उषा—(संस्कृतमाश्रित्य)

त्वं कुम्भाण्डसुता भव्या ··· ··· ।

··· ··· ··· ··· ··· ··· ॥

रामा - हूँ सहि उषा ! [ हुँ सखि उषे ! ]

··· ··· ··· ··· ।

आहूयतां चित्रलेखा तया सर्वं भविष्यति ॥

1 - उत्क्षेप, निन्दा । 2 - शरीरक शिथिलता सँ । 3 - देह सँ ।
4 - दुःख । 5 - विषय ।

चित्र० - (तानुपसृत्य) सुदं, अह्माणं पओअणं किं ?

[श्रुतम्, अस्माकं प्रयोजनं किम् ?]

उषा - शृणु, किञ्च -

(बराड़ी रागे) (गीत - ९)

ए सखि ए सखि देखह आए । अप ··· ··· ।।ध्रुवम्।।
सबे तनु धरषित[1] निशि मोर भेल । कओने पुरुष दहु संगम देल ।।
गुन शिल बंश··· ··· । ···सुनि प्रिति मोहि आज ।।
तोहे कुशला सखि सबहिक काज । कर परपञ्च[2] अबे तेजिअ बेआज[3] ।।
बिनु ··· ···· । आनन्दे देवानन्द कवि भान ।।

चित्र० - सहि सव्वं उच्चेअ तरुअरमूलम् । [सखि ! सर्वमुच्यते तरुवरमूले ।]

रामा - (संस्कृतमाश्रित्य) ··· ···· ।
···· ··· बाणासुरावृते ।
अङ्कणेषु निजोद्वेगाम्भण्डलीं कुरुते मुहुः ।।

(ततः प्रविशति कुम्भाण्डः)

कुम्भा०—··· ··· ··· ··· ···देवासुरः पानं कृत्वा देव्या सह सुप्तो बाणनृपो राज्यस्थिरथै, तज्जिज्ञासां करोमि ।

(ततः प्रविशति बाणः)

बाणः—सखे त्वरयैवोज्झिता निद्रा ।

कुम्भा०—(बाणनृपं प्रति) प्रभो ! दुर्नयारम्भं किम करोमि ? प्रगे सुप्तो भवान्यामिकैर्या - ··· ··· यस्यां··· ··· ··· ।

चन्द्रः सिञ्चति संसृतिं हि परितः पीयूषयुक्तैः करैः
भित्वा सन्तमसं मुदं नयति यो लोकान् सुलीलाकुलान् ।
तूर्णं··· ··· ··· ··· ···तारातिस्नेहतो
भव्या भाति घटाद्वयो जनकरग्राह्या च सेयं निशा ।।

बाणः—कुम्भाण्ड ! ··· ··· ··· ··· ··· ।

---

1 - भविल । 2 - युक्ति लगाबह । 3 - लाथ त्यागि ।



कुम्भा० - बाणनृप ! मनः पृच्छ यथाग्रे ··· ··· ··· ।
चित्रलेखा सर्वबोधा रामा नृत्यति नर्तकैः ।
··· ···· ··· ···ज्यं विचिन्तय ।।

बाणः - आम, सखे कुम्भाण्ड ! आम् । तदाश्रमनुत्थव्यग्रता तिष्ठत्येव ।

( इति निष्क्रान्ताः सर्वे )

इति द्वितीयोऽङ्कः

# ।।अथ तृतीयोऽङ्कः।।

(ततः प्रविशति चित्रलेखा)

चित्र० - ··· ··· ···· ··· ··· ··· ··· ··· ··· ···

(ततः प्रविशति कञ्चुकी)

कञ्चु० - किञ्च, (राजविजयरागे) - (गीत - १०)

कञ्चुकि [1]सञ्चहि देल परवेस ।
भीषन[2] नयन [धवल सभ केस] ।।
लगहुक लोक जाहि नहि सूझ ।
उचहु रवे[3] जे कहिनि[4] नहि बूझ ।।
विपरित तिलक लपेटलि [ पाग ] ।
[ बेंत हाथ] तन्हि की कहब भाग ।।
आनन्दे देवानन्द कवि गाव ।
राजसदन कीदहु परथाव ।।

किञ्च, अये बाणनगरमध्यवृत्तान्तज्ञा वृद्धाः !

---

1- स्थिर सँ । 2- भयानक । 3- शब्दें ।
4- कथन ।

(प्रविश्य वृद्धा)

वृद्धा— अज्ज ! वन्देमि । [ आर्य ! वन्दे । ]

कञ्चु०— वत्से ! कल्याणानां पात्रं भूयाः ।

वृद्धा— हा हद्धि ! एसा दसा तादस्स । [हा हतास्मि ! एषा दशा तातस्य ?]

कञ्चु०— पश्य पुत्रि !

केशा मे धवलन्ति धर्षितधृता भवन्ति गण्डश्रियो ।
घोरस्त्वक्षि-रुजो कलेवरचला शुष्कातिशुष्काकृतिः ।
तापयत्ताः खलु थवरन्ति रदना हीनन्ति छिन्नादशा,
केनाहं करवै नृपस्य सततं सेवामतोऽश्चलितः ॥

पुत्रि ! बाणनृपान्तःपुरवृत्तान्तं कथय ।

वृद्धा— वाढमुसाए गन्धव्वं परिणओ हुविस्सदित्ति ।
[ वाढम्, उषाया गान्धर्वं परिणयं भविष्यति । ]

कञ्चु०— नैषा कथा पुत्रि ! वाच्या ।

वृद्धा— दूरदेसादेसा कधा । [ दूरदेशादेषा कथा । ]

कञ्चु०— गोप्यैवास्माभिः बाणनृपतिश्रिया । एहि तदुपान्तनगरं प्रविशाव ।

(इति निष्क्रान्तौ)

॥ विष्कम्भकः ॥

(ततः प्रविशतो चित्रलेखा-रामे)

चित्र०— सहि ! बाणस्स पुत्ति पेसिदुं ... ... ... । [सखि ! बाणस्य पुत्रीं प्रेषयितुं ... ... ... ।]

( ततः प्रविशति उषा )

उषा— (संस्कृतमाश्रित्य)

रतिचोरो मया पूर्वं प्राप्तः स्वप्नेन यो निशि ।
सख्यौ ! तेन विना ... ... ... ... ।

चित्र०— ( उषादशां निरूप्य ) हा हद्धि । ता एका कधा नाण्णा । (इति रोदिति ) । [ हा हतास्मि ! सा एका कथा, नान्या । ]



रामा— (वराडी रागे)- (गीत—११)

लाथ करह जनु करह उपाए ।
उषाएँ वसन[1] बाँधल विष आए ॥ध्रु०॥
कहुखन अनल[2] धसए धनि जाए ।
कहुखन धरणी मुरुछि लोटाए ॥
सपन पुरुष पहिले अवधारि ।
लय पट त्रिभुवन लिखह विचारि ॥
सबे गवतरु चिन्हसि तोहें नारि ।
अपने करनि तोहे लाग गोहारि ॥
[3]तिरिक वेदन तिरि निरखए जान ।
आनन्दे देवानन्दकवि भान ॥

चित्र०— (मूर्च्छां विभाव्य, संस्कृतमाश्रित्य)

येषां नामानि रूपाणि त्रिलोक्यां प्रथितानि च ।
एतानि यानि जानामि नाहं सखि विशेषतः ॥

रामा— (उषाया नाडीं निरूप्य संस्कृतमाश्रित्य)

कदाचिद् बलते नाडी कदाचित् स्थिरतां गता ।
एतच्चिह्नगणेनास्या ज्ञायते दोषलक्षणम् ॥

उषा— (चित्रलेखां प्रति संस्कृतमाश्रित्य)

किं शीलं किमथो कुलं किमु वयः किन्नाम तस्य स्फुटं
के नीवृत्सुमतेस्तदीयभवनं क्वास्ते त्रिलोक्यां ततः ।
दैन्येनात्र भणामि यस्य सकलां संस्थां वद प्रस्तुतां
स्वप्ने यो रतितस्करः सखि ! मया दृष्टः स कः शोभनः ॥

रामा—(संस्कृतमाश्रित्य)

अष्टाङ्गं बहुशो बद्ध्वा करोमि सखि गोचरम् ।
उषा मरणसंप्राप्ता पत्रं लिखसि सत्वरम् ॥

---

१— वस्त्र  २— आगि ।  ३- इसीक वेदना स्त्रिये बूझि सकैछ ।

चित्र॰—(दीर्घमुष्णञ्च निःश्वस्य) सहि ! कहिं क्ख मुज्झ ईरिसो आआसो।
[सखि ! कुत्र खलु मे ईदृश आयासः ?]

रामा - (उषामुत्थाप्य सगद्गदं साश्रु संस्कृतमाश्रित्य)
चित्रपटं सखि ! तूर्णं लिखसि लिखस्यैकचित्तेन ।
पतति त्वदीयचरणे सेयं ते सहचरी नित्यम् ॥

चित्र॰ - (पीडां नाटयति ।) सहि ! अहं पि तेणोवहआ, जेण ईरिसे आआसे
भवदी मं णिउञ्जीअदि, सं .... ... .... .... ।
[सखि ! अहमपि तेनोपकृता, येन ईदृशे आयासे भवती मां नियुनक्ति।]

रामा - (चित्रलेखामालिङ्ग्य) सहि ! अणुग्गहं कुरु, दिढं कुरु ।
[सखि ! अनुग्रहं कुरु। दृढं कुरु।]

चित्र॰ - (अङ्कुष्यङ्केन लिखति)
(आसावरी रागे)--(गीत सं॰--१२)

बामकरे धनि पत्र लए कहुँ, बैसलि जङ्घा जोरि ।
सबहुँ सँ दिठि दुहु निवारिए[1] रीति दुर कय भोरि[2] ॥
अनेक वरनिक पास[3] धए कहुँ, चित्रलेखा नारि ।
एकचित भए, माथ नत कए, भुवन सबे अवधारि[4] ॥
दखिन अंगुष्ठ तर- [जनी] निअ, आगु लेखनि लाए ।
आठ दिशपति मति निरूपिए, ध्याने धृति थिति पाए ॥

(पुनर्मूर्च्छां विभाव्य रामां प्रति) सहि ! दोआरवदिए जादअकुल-
णामे उअत्थिदं । [सखि ! द्वारवत्यां यादवकुलनाम उपस्थितम् ।]

रामा - (चित्रलेखां प्रति) सहि ! पुणोवि हिदअं विसीदे अह्माणं । [सखि !
पुनरपि हृदयं विषीदते अस्माकम् ।]

चित्र+उषा-
जकर जे जहाँ जइसन आकृति, लिखय ताहि अनुरूप ।
पुछह जनु किछु तासु तुलना, मुगुध [5]नाकक भूप ॥

१ - दृष्टि हटाए । २ - साधारण रीति हटाए सूक्ष्म दृष्टिएँ । ३ - कुच्ची,
तूलिका । ४ - विचारि । ५ - स्वर्गक राजा इन्द्रो मुग्ध छथि ।



आनन्द देवानन्द गाबए, पुरथु ऊषा आस ।
सएह सबतहुँ[1] अधिक चौदिस, चित्रपट जसु पास ॥

(निरूप्य, किञ्च संस्कृतमाश्रित्य)-
दृष्टिः चित्राम्बरत्नं नयति गुणयुता वामपाणौ विधृत्य
तन्नूनं सर्वगन्त्री मृदुरथ तनुते वर्णिकामस्य रूपा ।
तर्जन्यङ्गुष्ठशेषे कलयतिकुशला तूलिकामन्यपाणे-
रेतत् समीक्ष्य जघां रहसि-धृतिनता चित्रलेखा लिलेख ॥

(नेपथ्येऽप्रविष्टजनो बाणनृपप्रस्थापितो-' नूनमुषाकन्यादर्शनेनुरागं न।" ।)

रामा - आअच्छदु सो जणो तदिति तथा निष्क्रान्ता जनः । [आगच्छतु
स जनः ... ... .... ]

उषा - (दूरतो दृष्ट्वा सभयकौतुकम) आदिसइ । [आदिशति ।]
(प्रविश्य बाणनृपः)

बाणः - पुत्रि ! कथमुद्विग्ना त्वमसि ?

उषा - (प्रणम्य) ताद ! ण कोवि उद्वेअस्स कारणं । [तात ! न किम-
प्युद्वेगस्य कारणम् ।]

बाणः - पुत्रि यथासुखं स्थीयताम् ।

उषा - तहा किदं ताद । [तथा कृतं तात ।]

बाणः - (अन्यतो गत्वा) क्व कुम्भाण्डमन्त्री ?

कुम्भाण्डः - जयति जयति बाणभूप। । (सभयकौतुकम्) महाराज किमर्थम-
स्मदाह्वानम् ?

बाणः - कुम्भाण्ड ! नूनमस्माकं महाह्वावेशः ।

कुम्भाण्डः — बाण ! कुदृष्टि दूरीकुरु ।

बाणः - आः पाप ! पुरुषं न जानासि किमपि ।

कुम्भाण्डः - (सव्यथम्) कुमतिरसि बाणनृपते । केषामपि नो भवान् मित्रम् ।
त्यज चञ्चलताम् । भूयो नितान्तनाशाय ते गर्वः।

बाणः - आः पाप ! शृणु किमपि,

१ सबसँ ।

इन्द्रादयो मम त्रस्ताः स्वात्मसंगोपनस्थिताः ।
परे के सन्ति भुवने ये मे दृक्पथपारगाः ॥

कुम्भाण्डः—(सक्रोधम्) हा हतोस्मि ! कोपपरिपाति भाविता ।

बाणः—(कुम्भाण्डं हस्ताहस्तिकया गृहीत्वा विजने स्थितः) ।

चित्र० (संस्कृतमाश्रित्य)

विजने तिष्ठतो दूरे बाणकुम्भाण्डमन्त्रिणौ ।
सख्यौ चित्रपटं तूर्णं सर्वं परिचिनोतु मे ॥

रामा - परिरणन्नूपुरं सहि गेण्हि गेण्हि । [परिरणन्नूपुरं सखि, गृहाण, गृहाण ।]

उषा - (चित्रलेखां विभाव्य, कम्पितहस्तेन चित्रपटं गृहीत्वा) सहि, सअलं चित्तपटं दिट्ठं । [सखि, सकलं चित्रपटं दृष्टम् ।].

चित्र० - सहि ! कधेहि, को ........ ।

उषा - (चित्रपटं निरूप्य साक्षेपम्) एसो भुअणभव्वो । [एष भुवनभव्यः ।]

चित्र० - (मूर्च्छिता पतति) ।

उषा—(चित्रलेखां हस्ताहस्तिकया गृहीत्वा) सहि ! उअणिहिदं क्खु । [सखि उपनिहितं खलु ।]

चित्र० - सहि एसा कधा ण हुविस्सदित्ति । सो जणो जलमज्झणअरवासी । [सखि एषा कथा न भविष्यति । स जनो जलमध्यनगरवासी । ]

उषा - (राजविजय रागे)— [गीत सं०—१३]

अरे जाह [1]द्वारावति आजे, तेजि लाजे,
हित भए चिन्तह काजे ॥
पट देखि उड़ल गेआने, [2]अवधाने,
अनिरुध पति देह दाने ॥

(पुनस्तर्जन्या दर्शयति)—

मने तोहि [3]गोचर जओं पुनु, किछु सुनु,
मोर अपराध जनु गुनु ॥

1 - द्वारका । २ - विचारि । ३ - प्रत्यक्ष ।



[4]दखिन समिर भेल वामे, [5]परिनामे,
[6]हनए मदन मोहि ठामे ॥

(रामामालिङ्ग्य)—

मुरछिअ [7]रविशशि देखी, [8]अवशेखी,
नित दिन होअ विशेखी ॥
[9]अनल चानन बिन्दु भेला, विधि देला,
तेहि कलप पड़ि गेला ॥
देवानन्द कवि भासे, पुरु आसे,
न होअह किनहु उदासे ॥

चित्र० - (उषां निर्वर्ण्य) सहि ! धराए विवरे एदं क्खु णो हुविस्सदित्ति । [सखि धराया विवरे एतत् खलु नो भविष्यति ।]

रामा - (सरोमाञ्चम्) सहि ! खणमत्तेण दे आआसादो सो जणो आअमिस्सदि । [सखि क्षणमात्रेण ते आयासात् स जन आगमिष्यति ।]

उषा - (संस्कृतमाश्रित्य)

अञ्जलिपुटकं मूर्द्धनि तत्कृत्वा भूमिसंलग्नम् ।
द्वारावतिगमनार्थं सुचित्रलेखां सखीं वन्दे ॥

चित्र० - सहि रामे, किं भणामि, तत्थ गमणं क्खु दाणिं जुत्तं । अणुयामा सहि मरणं पत्ता । [सखि रामे, किं भणामि, तत्र गमनं खलु इदानीं युक्तम् । अनुयामं सखी मरणं प्राप्ता ।]

उषा - पत्थाणस्स समओ सहीए उअत्थिदो । [प्रस्थानस्य समयः सख्या उपस्थितः ।]

रामा - अच्चरिअं, अच्चरिअं [आश्चर्यमाश्चर्यम् ]

कुम्भाण्डः - अन्तःपुरवार्तावाप्तये स्थितोस्मि ।

बाणः— आम्, मन्त्रिराज ! आम् ।

४—दक्षिणाहा बसात । ५—परिणाम, फलित । ६—कामदेव मारैत छथि ।
७ - सूर्य ओ चन्द्र । ८ - बाँचल । ९ आगि ।

कुम्भाण्ड: - (सपरितापं परितो विलोक्य) बाणनृपो न मद्वचनपरिपालकः ।

बाणः - कुम्भाण्ड ! एहि, निजनिजभवनगमनमिदानीमुचितम् ।

(उभौ तथा कुरुतः ।)

उषा - (संस्कृतमाश्रित्य सविस्मयं नेपथ्याभिमुखमवलोक्य)

शान्ति-स्वस्त्ययने विधाय चलिता सा चित्रलेखा तदा
द्रष्टुं द्वारवतीमुपेत्य सुमतिं या योगविद्याबलात् ।
प्राद्युम्निस्तनुकं ग्रहीतुमपरं बाणात्मजाया मुदे
यत्कार्यं घटयत्यहो प्रियसखी तत्किं पराः कुर्वते ॥

किञ्च, " ... ... ... ।

रामा—(संस्कृतमाश्रित्य)

घनमतिभरयत्नैः प्रेरिता चित्रलेखा
बहुपरिचयवेत्री चिन्तया व्यग्ररूपा ।
त्रिभुवनकमनीया द्वारकामाप्रतस्थे
स्मरति न हितकर्त्री प्रीतये क्वापि बाधाम् ॥

(इति निष्क्रान्ताः सर्वे)

॥ इति पटलिखननिरूपणं नाम तृतीयोऽङ्कः ॥

# अथ चतुर्थोऽङ्कः

(ततः प्रविशति कुम्भाण्ड मन्त्री)

कुम्भा० - ( सर्वतो विलोक्य ) कियन्ति दिनान्यहो नृपदर्शनं विना गतानि । शयनशालातः स एव समागतोऽत्र ।

(प्रविश्य बाणनृपः)

बाण— (कुम्भाण्डं दृष्ट्वा सोद्वेगं) कुम्भाण्ड ! सप्तमसौधे भिन्ना भिन्ना कथा प्रस्तूयते ।

कुम्भा०— बाणनृप ! नोद्वेगस्य सा ।



बाणः— कुम्भाण्ड ! मृदङ्गादिध्वनिरत्र किमिति ?

कुम्भा०— जय जय बाणनृप ! शृणु,

कौमारव्रतवृन्दं तनया ते विस्तरं कुरुते ।
श्रुतिगामी ध्वनिरस्मादन्तःपुरचञ्चला लोकाः ॥

बाणः— (कुम्भाण्डं प्रति) इतो दक्षिणकोणे निःसृता चित्रलेखा हयवेगेन क्व प्रस्थिता ?

कुम्भा—० ( बाणनृपं प्रति ) नारीचर्चा पुंसि न युक्ता ।

बाणः— मन्त्रिराज ! नूनं प्राप्तबोधः ।

(ततः प्रविशति पथि चित्रलेखा)

चित्र०— (द्वारकानिकटगमनवेगमनस्वं दर्शयित्वा चैतन्यं प्रति )

नो मे कार्यं भविता नारदमुनिना विना तेन ।
स्मरणं तस्य विधेयं तनुते यत्तामसीं विद्याम् ॥

(ततः प्रविशति तीर्थजलाघमर्षणकर्ता नारदः )

(राजविजयरागे) [गीतसं०- १४]

हरिक भगत[1] मोएँ मुनिवर भेस ।
रावतरु सबहिक हरिअ कलेस ॥ ध्रु० ॥
खने अघमर्षण तीर्थक जले ।
खने कौतुक फिरि आवओ भवने ॥
घरें घरें कन्दल[2] जारिओं गाम ।
जनम धवल विधि नारद नाम ॥
खनहि पिरित तोरइत नहि लाज ।
खने खने चिन्तिअ देवक काज ॥
आनन्दे देवानन्द कवि गाव ।
कमहि वेकत[3] होएत मोर सोभाव ॥

---

१— अं मोएँ-- मूल मे । २- कन्दल या कलह कराय । ३— व्यक्त ।

किञ्च, मुनिभिः पूर्वं चर्चा कृता तपस्यापरिपाकैः ।
इति लज्जितोस्मि सततं तरुणी तामेकदा कुर्वे ॥
कया सन्ध्यावन्दनतो ध्यानच्युतिं मे जाता ।
धिक् कष्ट समयाता सा ··· ··· ··· ··· ॥

चित्र॰— ( क्वणत्नूपुरं मुनिवरमुपसृत्य) ताद ! वन्देमि । [तात वन्दे। ]

नारदः— आश्चर्यमाश्चर्यम् !! एषा चित्रलेखा कथमत्र ? शुभाशीर्दत्ता भव ।

चित्र॰— ( भ्रूभङ्गं संस्कृतमाश्रित्य)
बाल्यावधि सभामध्ये तव विध्नात् तनुषे सदा ।
तव कृपाशिषदानेन तात ! मे व्यथते-मनः ॥

नारदः— पुत्रि ! सत्कृमेणाशिषो दत्ताः ।

चित्र॰— (मुनिं प्रति ) ताद ! कुसलं दाणि तुज्झ प्पसादेण अह्माणं सव्वं ।
[ तात ! कुशलमिदानीं तव प्रसादेन अस्माकं सर्वम् । ]

नार॰— आम् पुत्रि ! आम् । क्षणं ध्यात्वा) शृणु,
कल्याणं मे तीर्थे तीर्थे जातः कम्पश्चनः कर्णे ।
बाणे भूपे का वा वार्ता सेयं कान्ते ! श्राव्या तूर्णम् ॥

चित्र॰— (मुनि निर्वर्ण्य) ताद ! गोरिए वरेण तस्स पुत्तीए किम्पि तदित्ति ( रोदिति ।) [तात ! गौर्या वरेण तस्य पुत्र्याः किमपि तत् ।]

नारदः— (सहर्ष) त्यज पुत्रि ! सगद्गदस्वरम् । गौर्याः सुपुरुषवरो नान्यथा क्रियते प्रकारः ।

चित्र॰— ताद ! अच्चरिअं अच्चरिअं !! तुज्झ अणुभवादो सच्चं [तात ! आश्चर्यमाश्चर्यम् !! तवानुभवात् सत्यम् ।]

(अञ्जलिं बद्ध्वा असावरी रागे)— [गीतसं॰— १५]
सेहे सहचरि ॥ध्रु॰॥

सवे मुनी भेलि सरि[1] , प्रानक दोसरि,
[2]परिरम्भ सौँ नहि तेजलि हरि हरि ॥

१- सदृश । २ - आलिंगन ।



आवे न होअए हेरि, ताहेरि मुख गिरि,
पले पले धनि महि मुरुछए बेरि बेरि ॥
सपन देलन्हि गौरि, बर दए मन भरि,
तहिखन सओ भरेँ भए गेलि दूबरि ॥
सुनु मुनि एँ परि, कि करति सुन्दरि,
देवानन्द कवि गाबए आगु सरि ॥

नारदः— (विचिन्त्य) मृदङ्गादिध्वनिं श्रुत्वा सखीभ्यां तटिनीतटे ।
गौरीहररसक्रीडां द्रष्टुं बाणसुता गता ॥
(करेण करं प्रोन्मृज्य स्थितः)।

चित्र॰— (दीर्घमुष्णञ्च निःश्वस्य, संस्कृतमाश्रित्य)
मम लिखितचित्रपटतो बाणात्मजया तदा सख्या ।
अनिरुद्धमूर्तिरेका तन्मिथ्या दर्शिता रहसि ॥

नारदः— (क्षणं ध्यात्वा) पुत्रि ! कष्टमुषानिरुद्धयोर्वयम् ।

चित्र॰— (मुनिं बार बार प्रणम्य) ताद ! सा कथा केण उवाएण ?
[तात ! सा कथा केनोपायेन?]

नारदः— (विभाव्य) चित्रलेखे ! द्वारकामध्यान्तःपुरवासी प्राद्युम्निस्तस्य न तामसी विद्यां विना ।

चित्र॰—(मुनिपादद्वयोपरि शिरो धृत्वा) ताद ! सा दे किवट्ठिदा । [तात ! सा ते कृपास्थिता ।]

नारदः— तेन किम् ?

चित्र॰— विज्जाए दाणेण ए··· ···दुयं भवं । [विद्याया दानेन ··· ··· भवान् ।]

नारदः— आम्, पुत्रि ! आम् ।

चित्र॰— (मुनिं प्रणम्य, नटश्री रागे) [गीत—१६]
करयुग जोरि मुनि विनमओं आए।
सभ कों मङ्गल सोहहिँ उपाए ॥

जकरे बलें तोहें सवतरु[1] जाह ।
जाहि तह सभको होअ उछाह[2] ॥
जेंपर परसुखें हो अगम नामे ।
से तामसि विद्या देह दाने ॥
आनन्दे देवानन्द कवि चिन्त ।
जानह तकर तोहहि पए तन्त[3] ॥

नारदः—(सविमर्शम्) पुत्रि चित्रलेखे ! शताग्रहेण तां ददामि । परकर्णगता यथा सा न भवति ।

चित्र०—(सपुलकम्) ताद ! सव्वधा । [तात ! सर्वथा ।]

नारदः (हस्ताहस्तिकया तामस्यै ददाति ।)

चित्र०—भो महाभाअ ! लद्धा सा । [भो महाभाग ! लब्धा सा ।]

नारदः—(सर्वतो विलोक्य) पुत्रि ! बाणानिरुद्धयो युद्धे मम स्मरणं विधेयम् ।

चित्र०—(प्रणम्य) ताद ! सव्वधा, सव्वधा । [तात ! सर्वथा, सर्वथा ।]

नारदः—आश्चर्यमाश्चर्यम् ।

गृहीत्वा तामसीं विद्यां क्षिप्रं मम कराद्वियम् ।
अनिरुद्धस्य भवनं प्राप दण्डद्वयेन सा ॥

कथं गता भवती ।

चित्र०—उअविसदु भवं । [उपविशतु भवान् ।]

(नारदः सविमर्शं तामसीं विद्यां दत्त्वा निष्क्रान्तो द्वारकामभिधानात् ।)

(नेपथ्ये मृदङ्गध्वनिः—
गृहीत्वा तामसीं विद्यां सहसा चित्रलेखया ।
अनिरुद्धो हृतस्तूर्णमहो ! स्त्रीचरितं महत् ॥)

(ततः प्रविशति कुम्भाण्डः, बाणमवलोक्य स्थितो दूरेण)

बाणः—(कुम्भाण्डं प्रति) सर्वतः सगर्वमहो दुष्प्रवेशनगरे स्थितोस्मि । उषा-रामे क्व तिष्ठतः ?

कुम्भा०—बाणनृप ! पश्य, झटित्यागते ते ।

(ततः प्रविशति उषा रामा च)

---

१ - सभ ठाम । २ - उत्साह । ३ - तौं दा रहस्य जनैत छह ।



उषा - ताद ! वन्देमि । [तात ! वन्दे ।]

रामा - महाराअ ! मएवि पणामो तुज्झ किदो । [महाराज ! मयापि प्रणामस्तव कृतः ।]

बाणः - उषे ! तूर्णमुभयत्र सखी निद्यं कथिता । (?)

(एकत्र गगनगमने मनाक्तामसीविद्योन्मोकं प्राप्य अनिरुद्धः ।)

अनिरुद्धः - (चित्रलेखामग्रतो दृष्ट्वा प्रणम्य) कुतस्त्वं चित्रलेखे ! मां नीत्वा गच्छसि ?

चित्र० - (अनिरुद्धं प्रत्याशीःपूर्वकं संस्कृतमाश्रित्य)

सख्या बाणस्य सुतया प्रेषिता द्वारकामहम् ।
त्वं स्वप्नेन तया दृष्टस्तस्याः स्वामी भव प्रभो ॥

अनि०— (मूर्च्छां कृत्वोत्थाय) चित्रलेखे ! सा मयापि स्वप्ने दृष्टा । तदवधि मरणप्राप्तोऽस्मि ।

चित्र० - (अनिरुद्धमुपसृत्य) भो महाभाअ ! तुम्ह संगमे हि सा जिविस्सइ । [भो महाभाग ! तव संगमे हि सा जीविष्यति ।]

अनि०— (गोचरेण चित्रलेखां निर्वर्ण्य) नूनं तया विना ममापि मरणं भावि । चित्रलेखे ! मां शोणितपुरं नय ।

चित्र०— (सानन्दं) भो महाभाअ ! जादवणन्दण ! सोणिदउरं लद्धम् । [भो महाभाग ! यादवनन्दन ! शोणितपुरं लब्धम् ।]

अनि०— ( साश्चर्यम् ) आम्, चित्रलेखे ! आम् । तस्याः पूर्वं मां नीत्वा समागतासि । नूनमीदृश्याम्—

(छन्द-२)

सुरसिन्धुवैरपुरी हरेरियमम्बुधिप्रतिसङ्गता ।
बलकृष्णगदकामानिरुद्ध-सुनन्दसज्जनपूजिता ॥
पुरहूत-पावक-कालकौणपपालियक्षहरश्रिता ।
मुनि-किन्नरामरसिद्धयादवपूत-सन्तत-चिन्तिता ॥
मणिपूरविद्रुमहीरहारसुवर्णसंहृतिमण्डिता ।
नवपुष्पचन्दनकुङ्कुमागुरुधूपदीपविराजिता ॥

पनसादि-कानन-नागराजि-मृगौकमोमहिषीतटा ।

निधिपूरपूरितमेखला युवतीविजृम्भितसत्पटा ॥

किमहं वदामि कथामिमामिह याहि सर्वनमस्कृता ।

तनुते बुधेषु मुदं सदा कुतुकेन सत्कविवर्णिता ॥

चित्र०—(अनिरुद्धं निरूप्य संस्कृतमाश्रित्य)

मम लिखितचित्रपटके सा हि भवन्तं मुहु र्दृष्ट्वा ।
जीवति येन सहचरी चलानिरुद्ध ! त्वरां कृत्वा ॥

अनि०—आम्, चित्रलेखे ! आम् ।

चित्र०—(तामसीविद्यया तमाच्छाद्य प्रस्थानं कृत्वा) कामनन्दन ! शोणितपुर-मुपलक्षय ।

अनि०—(आत्मानं प्रति) विद्यारब्धः समागतोस्मि अग्रतः ।

बाणः—(विलोक्य) मन्त्रिराज ! सा तनया कुतः ?

कुम्भा०—बाणनृप ! सप्तमधवलगृहे ।

रामा—(उषां प्रति) सहि ! कावि कहा दोआरवदीए सन्निहिदा ।
[सखि ! कापि कथा द्वारवत्याः सन्निहिता ।]

उषा—(रामामालिङ्ग्य) सहि ! उब्वेअं परिहरिअ का कहा ?
[सखि ! उद्वेगं परिहृत्य का कथा ?

रामा—सहि ! कामणन्दणो आअदो दीसइ । विरहवेअणा दे गदा ।
[सखि ! कामनन्दन आगतो दृश्यते । विरहवेदना ते गता ।]

उषा—सहि ! हिअअं पुलअपत्तं ... ... ... ... ...
[सखि ! हृदयं पुलकप्राप्तं " "।]

(एकत्र बाणः)

बाणः—कुम्भाण्डमन्त्रिन् ! नूनमेव हि सुखस्थलं यावः ।

(इति निष्कान्तौ)

(प्रवेशकः) ॥

(नेपथ्ये—भो भो बाणासुरपरिचारकाः ! देवासनं देवासनम्, आचमनी-समाचमनीयं, भवतां सुचरणौ निधाय प्रविष्टोस्मि ।)



(ततः प्रविशत्यनिरुद्धः)

अनि०—(ऊर्ध्वमवलोक्य)

बाणासुरगृहस्यान्ते त्यज निद्रामयत्नहो ।
नारायणादिकृपया दुःखबन्धादसौ सुखी ॥

(पुन र्नेपथ्ये—
आनन्दगोपनं कार्यमनिरुद्धस्य सन्ततम् ।
येन रागेऽसुरस्याग्रे कथा न प्रस्तुता भवेत् ॥)

(ततः प्रविशति चित्रलेखा)

चित्र०—(सखीद्वयमालिङ्ग्य साश्रु सगद्गदम्) अणेअदिणे हि सहि ! तुम्हाणं दंसणं जादं । [अनेकदिनैः सखि ! ते दर्शनं जातम् ।]

उषा—अच्चरिअं अच्चरिअं । [आश्चर्यमाश्चर्यम् ।]

चित्र०—सहि ! समुद्दमज्झ-णिमीलिदाए णअरिए एसो कामणन्दणो उअणिदो
[सखि ! समुद्रमध्यनिमीलितायां नगर्यां एष कामनन्दन उपनीतः ।]

उषा—(साश्चर्यम्)— (छन्द—३)

१वेदविन्दअ पढिअ वेदिअ बम्हणा जह भावई ।
ठाम ठामे संपुण्ण सुन्दर बाजणा जह बाजई ॥
बन्दिलोअ करन्ति चौदिश भारती जह दीसई ।
रत्तिशेषे पढिए मागध पावणा जह रज्जई ॥
सप्ततन्त्रि वराअ तुम्बुरु सारंगी जह गावई ।
रितुराग छत्तिस रागिनी, गणना सदा जह भावई ॥

रामा—(उपसृत्य)— [छन्द—४]

आठ भाव करीए अंगन किन्नरा जह याचई ।
नारि जुत्थ तुलीए लच्छिमि रूपही जह सोहई ॥
लोअरासि अपुब्ब केसओ सारिसे जह सोहई ।
भब्बमान अनेक फिरिए गब्बई जह रायई ॥

दीश दीश विदग्धता अभिमानिका जह जाएई ।
सव्वकाल विसेवि बुड्ढओ जौवना जह जावई ॥
रोअ नाम गराम लेसओँ काहु नो जह दीसई ।
भीति सत्तुलिका अदूरहि दूरही जह चल्लई ॥
अम्बुरासि संपुण्ण सुन्दर मेहला जह सूनई ।
एक नारि बिचारि देखहु ताहि से पुनि आवई ॥

चित्र० – सहि ! एसो मे साहसो । [सखि ! एष मे साहसः ।]

अनि० – आम्, चित्रलेखे ! आम् ।

रामा – (चित्रलेखामालिङ्ग्य) सहि अम्ह घरं एदु भवदी ।
[सखि ! अस्मद्‌गृहमेतु भवती ।]

चित्र० – (सहर्षं संस्कृतमाश्रित्य) —

फलिता तामसी विद्या सिद्धा मे कार्यसंततिः ।
प्राद्युम्मि बाणतनयां प्राप्तः सखि ! परं मिथः ॥

(इति निष्क्रान्ताः सर्वे)

॥इति चतुर्थोङ्कः समाप्तः ॥

# अथ पञ्चमोङ्कः

(ततः प्रविशत्यनिरुद्धः । किञ्च असावरीरागे) ... [गीत- १७]

ए सजनिआँ ! अनिरुधे करु परवेसे ।
द्वारवती सञो नभपथेँ अवतरि, नारिक धए कहुँ भेसे ॥



पुनिम चान जसु मुखरुचि हिन भेलि, तसु तुलना नहि आने ।
मोरा मन अइसन रुपहि ओ जाने, कनक सदिश परमाने ॥
अनेक जतने धृति दए दए सिरिजल, जे विधि त्रिभुवन धीरे ।
जाहि देखि मुरुछि मुरुछि पर तिरिगन, न चेतय पावए चीरे ॥
आनन्दे देवानन्द कवि गावए, सुमरि सुमरि परथावे ।
अनेक जनम तप ऊपहि परिणत, अनिरुध बुझथु भावे ॥

अनि० – (आत्मगतम्)

पौत्रोऽहं पुरुषोत्तमस्य विदितः प्रद्युम्नसूनुः कृती
नित्यं यादवभूषणैः गुरुगणैः संवेष्टितः सर्वतः ।
एका स्त्री नयति स्म शोणितपुरं मां द्वारकामध्यतो
हारि हारि गणे स्थिते किमधिकं वन्दे लिपिं वैधसीम् ॥
(प्रकाश्य) अहमहो ! चित्रलेखादर्शनोत्सुकोऽस्मि ।

(प्रविश्य चित्रलेखा)

चित्र० – (अनिरुद्धं प्रति) स्वप्नकारणाओ भो जादअणन्दण ! एसा दे अवस्था सहिं विणा । [स्वप्नकारणात् भो यादवनन्दन ! एषा ते अवस्था सखीं विना ।]

(अनिरुद्धः स्वप्नस्मरणं विभाव्य, चित्रलेखा करजलैरनिरुद्धमुखं प्रक्षाल्य)

अनिरुद्धः – (तां विलोक्य) यया स्वप्नेनाहं दृष्टो, या मया तेन दृष्टा, सा कदा मिलिष्यति, तदभिसंज्ञा ।

(ततः प्रविशति उषा रामा च)

उषा – (चिरमिलितां चित्रलेखामालिङ्ग्य) सहि! अणेअदिणेहिं तुम्ह दंसणं। [अनेकदिनैः तव दर्शनम् ।]

रामा – (चित्रलेखां पुनः कृमेणालिङ्ग्य) सहि ! दे विप्पलम्भेण ईरिसी अवत्था । [सखि । ते विप्रलम्भेण ईदृशी अवस्था ।] (इति रोदिति)।

चित्र० – (उषामनिरुद्धपार्श्वे नीत्वा) भो महाभाअ ! एसा सही दे जाआ । [भो महाभाग एषा सखी ते जाता ।]

अनि० – सतीर्थिकमाह्नो लब्धिः ... ... – –(?)

रामा - भो जादअणन्दण ! वन्देमि । [भो यादवनन्दन ! वन्दे ।]

अनि० - रामे ! शुभाशिषो दत्ताः ।

उषा - (अनिरुद्धदर्शनं विभाव्य चित्रलेखां प्रति) सहि ! तुज्झ प्पसादेण एसो दिट्ठो । दोआरवदीं कधेहि सव्वं । [सखि ! तव प्रसादेन एष दृष्टः । द्वारवतीं कथय सर्वम् ।]

चित्र० - (उषां प्रति असावरीरागे) (गीत—१८)

गेलहुँ दोआरिका तेजि बेआज । अपरुब देखल सबकाँ साज ॥
तहाँ तिरि तरुण अनेक सानन्द । घरे घरे ऊगल पुनिमक चन्द ॥
लघु लघु गति गोपिए निअ भेस । सतमा सौध कएल परवेस ॥
पथ अपरुब विद्या मुनि देल । तेँ तनु सबकाहुँ लखिए ने भेल ॥
आनन्द देवानन्द कवि बानि । गगने जनि निधि मेराउलि आनि ॥

उषा—(चित्रलेखामुपसृत्य) सहि, गेहं पेक्खिअ, तादस्स भीदस्सि । [सखि ! गेहं प्रेक्षस्व, तातस्य भीरस्मि ।]

चित्र०—(उषां प्रति संस्कृतमाश्रित्य)

का चिन्ता बाणनृपते र्गौरीवरविभावतः ।
अनिरुद्धस्त्वया प्राप्तः सखिसङ्गोपनैर्बलः ॥

रामा - (साक्षेपम्) सहि ! तधावि तस्स सङ्गोवणं करणिज्जं । [सखि ! तथापि तस्य संगोपनं करणीयम् ।]

उषा—सच्चं मन्तिपुत्ती सही भणदि । [सत्यं मन्त्रिपुत्री सखी भणति ।]

अनि०- (सहर्षम्) चित्रलेखे ! कियन्ति दिनानि प्रेयस्याः सङ्गमैरनुभूतान्यपि दूरे स्थितामेनां दौत्येनानानय ।

चित्र०-(सवैचित्र्यम्) सहि ! मज्झ सव्वं कधिदं । [सखि ! मां प्रति सर्वं कथितम् ।]

अनि०—चित्रलेखे कथय ।

रामा—(उषां प्रति) सहि ! गाढं हिअअं करणिज्जं । [सखि ! गाढमिव हृदयं करणीयम् ।]

चित्र०—(अनिरुद्धमवलोक्य वराड़ी रागे)



(गीत—१९)

हे नायक ! सुन्दरि अभिसाररीती[1] ।
आदर कएलक, नव नेह लओलक, आगु पाछु पद धीती ॥ध्रु०॥
सकल सिंगार कए, मृगमद[2] तनु दए, बसन परिहि[3] निल काँती ।
संकेत देखओलक, तुअ गुन गओलक, धनि कर एतबा भाँती ॥
मानए रसमति, एक पए पथ गति, निअ मुख कौमुद भीती ।
हंसक नुपुर रव, कौसलेँ परिहर, तिमिर[4] निहारए नीती ॥
बेढ़लि गुरुजने तेँ डर धर मने, आउति आधनिसि ठामा ।
तिल कर युग लए, गोचरे कहओँ पए न करह निअ मन वामा[5] ।
दूति कथने वसि, तखने गेलाहे हँसि, निअ दिढ़ करु परथावे ।
यौवन नृप राज रतचर कर राज, देवानन्द मन भावे ॥

रामा - भो जादअणन्दण ! आआमेहि सा उण मिलिस्सदित्ति । [भो यादवनन्दन ! आयामैः सा पुन मिलिष्यतीति ।]

अनि०—चित्रलेखे !

क्षणं भ्रान्तिः क्षणं मूर्च्छा क्षणं संज्ञा क्षणं धृतिः ।
तां विना चरमावस्थां यान्ति प्राणास्ततो ध्रुवम् ॥

चित्र०—जादअणंदण ! उअणीदा दे जाआ [यादवनन्दन ! उपनीता ते जाया ।]

अनि०—आश्चर्यमाश्चर्यम् । आगमनमात्रेण प्रेयस्या मानः कृतः ।

रामा—(सभ्रूभङ्गं संस्कृतमाश्रित्य)

एषोऽञ्जलिपुटो दृश्यः शृणु यादवनन्दन !
एतस्या मानशान्त्यर्थं प्रकारं कुरु सर्वथा ॥

अनि०—(तस्याः परितो भ्रमणं विधाय)

अन्यां कामपि नैव पश्यति पतिस्त्वां वाक्सुधां याचते
किन्नो दुर्नयसि प्रिये ! नतमुखं तेनाहमुद्वेजितः ।

१—संकेत स्थान गमन । २ कस्तूरी । ३—पहिरि । ४—अन्धकार । ५—विपरीत ।

त्वत्पार्श्वस्थितये च भामिनि ! परित्यक्ता मया द्वारका
दत्त्वा मे परिरम्भणं प्रतिपलं कान्ते ! प्रसन्ना भव ॥

अपि च,
स्पर्शं नाञ्चति तामसी त्यज पुनः स्वामाकृतिं तामसीं
-- तत् सरसा धृतौ तदपि किं लज्जां न धत्से हृदा ।
ऊर्ध्वं वक्त्रकलानिवेश्यमना: किं वा कलानां निधिं
नाहो ! पश्यसि दासतुल्यमधुना कन्दर्पो हि देहेरभूत् ॥

किञ्च, (धनाश्रीरागे)—गीत – २० ]

ओ गे सुन्दरि ! तेजह तेजह अबे माने ।
करह सफल एहो, सकल यौवन मोर, करु परिरम्भन[६] दाने ॥
परख सहस दोस, न धरसि ताहि रोस, बिनु धने कीनह दासे ।
अधर अमिअ रस, दान करह बस अमर होएब तुअ पासे ॥

चित्र०—(उषां प्रति) सहि ! दिढं क्खु करणिज्जं हिअअं । [सखि ! दृढं खलु करणीयं हृदयम् ]

अनि०—
पाओब सबे सुख, ऊपर विधुमुख, करह जघन सञो देखो ।
रजनि नलिनि निर, ने रहए सेहो थिर, आरति राख विसेखी ॥
नील नलिनि सन, दुहु तोर लोचन, कखन धरत परगासे ।
जाबे पद पर बसि, तावे धनि गेलि हँसि, देवानन्द कवि भासे ॥

(नेपथ्ये-
पादाकुलकं मानसपुलकं, परमनिरुद्धं प्रेमनिबद्धम् ।
गान्धर्वात् सा विश्वविवाहान्मालामस्मै कण्ठे दत्ते ॥)

(पुन नेपथ्ये--- रे तस्करपथावतीर्णजन ! मालादानफलं भविष्यति । बाण ·· ··· ··· ···· षितोऽहं नानाबलैरुपस्थितोऽस्मि ।)

चित्र०— (सभ्रूभङ्गं संस्कृतमाश्रित्य)
प्रलापं कुरुतः पार्श्वे द्वारि यादवनन्दनौ
कथाद्रार्थकलिता तयो घोरा भविष्यति ॥

६—आलिंगन ।



रामा— (चित्रलेखामालिङ्ग्य) अच्चरिअं अच्चरिअं । [आश्चर्यमाश्चर्यम् ।]

(ततः प्रविशति द्वारी)

द्वारी-- (बाणकन्याधर्षणं दृष्ट्वा, परितो विलोक्य) बाणनृपः कदा मिलिष्यति ?

(प्रविश्य बाणनृपः)

बाणः— (द्वारिणमवलोक्य) कथय मदन्तःपुरसौधकथावृत्तं सविशेषम् ।

द्वारी-- जय जय महाराज ! भवत्कन्यागृहं प्रति कोपि प्रविष्टो, दृष्ट्वैवाग-तोऽस्मि ।

बाणः-- (शिरः करयुगलेन हन्ति । द्वारिकृवचन श्रवणं ··· )
-- ··· ··· तदाहूयतां कुम्भाण्डमन्त्री ।

कुम्भाण्ड-- किमाज्ञापयति देवः ?

बाणः-- कः कन्यागृहं प्रति कन्दर्पं प्रकाशयति परिचयने ।

कुम्भा०-- (सोपतापम् ) बाण ! तदुभयार्थबोधनं तपति मे हृदयम् ।

बाणः-- आम्, कुम्भाण्ड ! आम् ।
इन्द्रादयो मे भयतः पलायिताः कथां परेषां किमहं वदामि ।
कन्यागृहे चौर्यपथावलम्बतः को वा प्रविष्टो नहि वेद्मि तं जनम् ॥

(नेपथ्ये-- अरे रे !! भो भोः किङ्करादिगणाः ! शीघ्रं वेष्टयित्वा सज्जीभवथ भवनतः ।)

(पुन नेपथ्ये-- सर्वैरस्माभिः समन्तात्संवेष्टितः । किञ्च,
पुरप्रविष्टपुरुषः समायातु ममान्तिकम् ।
प्राप्तबाणनृपस्याज्ञा हन्मस्त्वां दूरतो व्रज ॥)

अनि०-- हं हो पापिष्ठाः ! दुष्परिणामं यास्यथ ।

उषा— ( दीर्घमुष्णं च निश्वस्य ] हा णाह जादअणन्दण !
का अवत्था हुविस्सदि [ हा नाथ यादवनन्दन !
का अवस्था भविष्यति ।] (इति रोदिति ।)

अनि०-- (उषां वारं वारं समाश्वास्य) प्रिये ! सर्वत्र मे जयः । का चिन्ता? भावनाश्रितोऽस्मि । क्षणेन ते जिता दुष्टगणाः ।

· · · · · · ·

· · · · · · ·

[अपूर्ण]

# उषाहरणक अप्राप्त अंशक तीन गीत[1]

१

अनेक यतन संग पाओल रे, जन्हि पुरल अभिमान ।
से पहु विधिदोषेँ दुर रह रे, पाँतर परल परान ॥

बिफल मोर जउवन रे ॥ध्रु०॥

मलय पवन तनु तापए रे, हिमकर निचुअ अंगार ।
मुरुछिअ कुसुम परसि कर रे, विषधर सन भेल हार ॥
चानन बिन्दु अनल जनि रे, तेजल सकल सिंगार ।
प्रलय करए सखि यामिनि रे, मनसिज एत मोहि मार ॥
तञो जिव हम पए राखब रे, जञो देखब तन्हि जाए ।
आनन्द देवानन्द गाबए रे, विरह संगति पए जाए ॥

( अंक - ५ )

२

( नागपाश - बन्धन - मोक्षार्थ श्री अनिरुद्धक उक्ति )

श्री भगवती स्तुति

जय जय दुर्गे जगत जननी, दुर कए भवभय होह दहिनी ।
खने नीला, खने सित निरमान, खन कुंकुम पंक तनु अनुमान ।
राका विधु मुख, गमन मराल, तीनि नयन सोभ केस कराल ।
लोहित रदन, लोहित कर पान, भृकुटि कुटिल पुनु मोर धेआन ।
श्रुति भुजेँ वसु भुजेँ हर दुख मोर, ऋषिहि पुरान गनल भुज तोर ।
करेँ वर अभय खड्ग जयमाल, मुकुर शूल धनु खेट विशाल ।
न जानिअ आगमे तुअ कत रूप, तेतिस कोटि देव तोहि निरूप ।

1 - History of Maithili Literature Vol. - I, Page 300.



पुनि पुनि दहओ देवि मोचर लएहु, नागपाश बन्धन मोक्ष दएहु ।
आनन्दे देवानन्द नति गाव, हरि चढ़ि रिपु हनि पुरह भाव ॥

( अंक-५ )

३

ए धनि, ए धनि, सुनह सरूप, कहि न होअ वर कओन रूप ।
त्रिभुवन दुहु नव अभिराम, देअहु न पारिअ हुनक उपाम ।
रभसे बेकत कए निअ निअ हाव, दुअउ करए रतिरंग सुझाव ।
आनन्द देवानन्द भन भाव, दुहुकाँ सकल भेल परथाव ॥

उषाहरणक तालपत्रक अन्तिम अंश--

या नानागुणपूरिता बहुरसा प्रस्तारसर्वस्वरा
गोतग्रामविशोभिता पुलकभूः संप्राप्तसद्विश्रुतिः ।
तालप्राञ्चितमूर्च्छना सरभसा तानानुरागस्थली
पुस्ती वासरिकापि वा ननु समासज्ञाति या विद्यते ॥

[ अपूर्ण ]

